॥ श्रीः ॥

# ॥ श्रीमद्वाल्मीकिरामायणम् ॥

संपुटः २.

# अयोध्याकाण्डः ॥

# AYODHYAKANDAM.

Published by:

The Educational Supplies Depot,

PALGHAT.

॥ श्रीः ॥

# ॥ श्रीमद्वाल्मीकिरामायणम् ॥

संपुटः २.

## अयोध्याकाण्डः ॥

## AYODHYAKANDAM.

Published by

**The Educational Supplies Depot,**

PALGHAT.

Pric[e]

# ॥ विषयानुक्रमणिक ॥

| सर्गः | | | पुटः |
|---|---|---|---|

॥ श्रीः ॥

## ॥ श्रीमद्रामायणपारायणोपक्रमः ॥

### स्मार्तसंप्रदायः ।

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ १

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ २

दोर्भिर्युक्ता चतुर्भिः स्फटिकमणिमयीमक्षमालां दधाना
हस्तेनैकेन पद्मं सितमपि च शुकं पुस्तकं चापरेण ।
भासा कुन्देन्दुशङ्खस्फटिकमणिनिभा भासमानासमाना
सा मे वाग्देवतेयं निवसतु वदने सर्वदा सुप्रसन्ना ॥

कूजन्तं राम रामेति मधुरं मधुराक्षरम् ।
आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥ ४

वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः ।
शृण्वन् रामकथानादं को न याति परां गतिम् ॥ ५

यः पिबन्सततं रामचरितामृतसागरम् ।
अतृप्तस्तं मुनिं वन्दे प्राचेतसमकल्मषम् ॥ ६

गोष्पदीकृतवाराशिं मशकीकृतराक्षसम् ।
रामायणमहामालारत्नं वन्देऽनिलात्मजम् ॥ ७

अञ्जनानन्दनं वीरं जानकीशोकनाशनम् ।
कपीशमक्षहन्तारं वन्दे लङ्काभयङ्करम् ॥ ८

उल्लङ्घ्य सिन्धोः सलिलं सलीलं
यः शोकवह्निं जनकात्मजायाः ।
आदाय तेनैव ददाह लङ्कां
नमामि तं प्राञ्जलिराञ्जनेयम् ॥ ९

आञ्जनेयमतिपाटलाननं
काञ्चनाद्रिकमनीयविग्रहम् ।
पारिजाततरुमूलवासिनं
भावयामि पवमाननन्दनम् ॥ १०

यत्र यत्र रघुनाथकीर्तनं
तत्र तत्र कृतमस्तकाञ्जलिम् ।
बाष्पवारिपरिपूर्णलोचनं
मारुतिं नमत राक्षसान्तकम् ॥ ११

मनोजवं मारुततुल्यवेगं
जितेन्द्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूथमुख्यं
श्रीरामदूतं शिरसा नमामि ॥ १२

यः कर्णाञ्जलिसम्पुटैरहरहः सम्यक्पिबत्यादरा-
द्वाल्मीकेर्वदनारविन्दगलितं रामायणाख्यं मधु ।
जन्मव्याधिजराविपत्तिमरणैरत्यन्तसोपद्रवं
संसारं स विहाय गच्छति पुमान्विष्णोः पदं शाश्वतम् ॥

तदुपगतसमाससन्धियोगं
सममधुरोपनतार्थवाक्यबद्धम् ।
रघुवरचरितं मुनिप्रणीतं
दशशिरसश्च वधं निशामयध्वम् ॥ १४

वाल्मीकिगिरिसम्भूता रामसागरगामिनी ।
पुनातु भुवनं पुण्या रामायणमहानदी ॥ १५

श्लोकसारसमाकीर्णं सर्गकल्लोलसंकुलम् ।
काण्डग्राहमहामीनं वन्दे रामायणार्णवम् ॥ १६

वेदवेद्ये परे पुंसि जाते दशरथात्मजे ।
वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना ॥ १७

वैदेहीसहितं सुरद्रुमतले हैमे महामण्डपे
मध्ये पुष्पकमासने मणिमये वीरासने सुस्थितम् ।
अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनिभ्यः परं
व्याख्यान्तं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥

वामे भूमिसुता पुरश्च हनुमान्पश्चात्सुमित्रासुतः
शत्रुघ्नो भरतश्च पार्श्वदलयोर्वाय्वादिकोणेषु च ।
सुग्रीवश्च विभीषणश्च युयराट् तारासुतो जाम्बवा-
न्मध्ये नीलसरोजकोमलरुचिं रामं भजे श्यामलम् ॥

नमोऽस्तु रामाय सलक्ष्मणाय
देव्यै च तस्यै जनकात्मजायै ।
नमोऽस्तु रुद्रेन्द्रयमानिलेभ्यो
नमोऽस्तु चन्द्रार्कमरुद्गणेभ्यः ॥ २०

---

श्रीवैष्णवसंप्रदायः ।

कूजन्तं राम रामेति मधुरं मधुराक्षरम् ।
आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥ १

वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः ।
शृण्वन् रामकथानादं को न याति परां गतिम् ॥ २

यः पिबन्सततं रामचरितामृतसागरम् ।
अतृप्तस्तं मुनिं वन्दे प्राचेतसमकल्मषम् ॥ ३

गोष्पदीकृतवाराशिं मशकीकृतराक्षसम् ।
रामायणमहामालारत्नं वन्देऽनिलात्मजम् ॥ ४

अञ्जनानन्दनं वीरं जानकीशोकनाशनम् ।
कपीशमक्षहन्तारं वन्दे लङ्काभयङ्करम् ॥ ५

मनोजवं मारुततुल्यवेगं
जितेन्द्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूथमुख्यं
श्रीरामदूतं शिरसा नमामि ॥ ६

उल्लङ्घ्य सिन्धोः सलिलं सलीलं
यः शोकवह्निं जनकात्मजायाः ।
आदाय तेनैव ददाह लङ्कां
नमामि तं प्राञ्जलिराञ्जनेयम् ॥ ७

आञ्जनेयमतिपाटलाननं
काञ्चनाद्रिकमनीयविग्रहम् ।
पारिजाततरुमूलवासिनं
भावयामि पवमाननन्दनम् ॥ ८

यत्र यत्र रघुनाथकीर्तनं
तत्र तत्र कृतमस्तकाञ्जलिम् ।
बाष्पवारिपरिपूर्णलोचनं
मारुतिं नमत राक्षसान्तकम् ॥ ९

वेदवेद्ये परे पुंसि जाते दशरथात्मजे ।
वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना ॥ १०

तदुपगतसमाससन्धियोगं
सममधुरोपनतार्थवाक्यबद्धम् ।
रघुवरचरितं मुनिप्रणीतं
दशशिरसश्च वधं निशामयध्वम् ॥ ११

श्रीराघवं दशरथात्मजमप्रमेयं
सीतापतिं रघुकुलान्वयरत्नदीपम् ।
आजानुबाहुमरविन्ददलायताक्षं
रामं निशाचरविनाशकरं नमामि ॥ १२

वैदेहीसहितं सुरद्रुमतले हैमे महामण्डपे
मध्येपुष्पकमासने मणिमये वीरासने सुस्थितम् ।
अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनिभ्यः परं
व्याख्यान्तं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥

---

माध्वसंप्रदायः ।

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ १

लक्ष्मीनारायणं वन्दे तद्भक्तप्रवरो हि यः ।
श्रीमदानन्दतीर्थाख्यो गुरुस्तं च नमाम्यहम् ॥ २

वेदे रामायणे चैव पुराणे भारते तथा ।
आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते ॥ ३

सर्वविघ्नप्रशमनं सर्वसिद्धिकरं परम् ।
सर्वजीवप्रणेतारं वन्दे विजयदं हरिम् ॥ ४

सर्वाभीष्टप्रदं रामं सर्वारिष्टनिवारकम् ।
जानकीजानिमनिशं वन्दे मद्गुरुवन्दितम् ॥ ५

अभ्रमं भङ्गरहितमजडं विमलं सदा ।
आनन्दतीर्थमतुलं भजे तापत्रयापहम् ॥ ६

भवति यदनुभावादेडमूकोऽपि वाग्मी
जडमतिरपि जन्तुर्जायते प्राज्ञमौलिः ।
सकलवचनचेतोदेवता भारती सा
मम वचसि विधत्तां सन्निधिं मानसे च ॥ ७

मिथ्यासिद्धान्तदुर्ध्वान्तविध्वंसनविचक्षणः ।
जयतीर्थाख्यतरणिर्भासतां नो हृदम्बरे ॥ ८

चित्रैः पदैश्च गम्भीरैर्वाक्यैर्मानैरखण्डितैः ।
गुरुभावं व्यञ्जयन्ती भाति श्रीजयतीर्थवाक् ॥ ९

कूजन्तं राम रामेति मधुरं मधुराक्षरम् ।
आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥ १०

वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः ।
शृण्वन् रामकथानादं को न याति परां गतिम् ॥ ११

यः पिबन्सततं रामचरितामृतसागरम् ।
अतृप्तस्तं मुनिं वन्दे प्राचेतसमकल्मषम् ॥ १२

गोष्पदीकृतवाराशिं मशकीकृतराक्षसम् ।
रामायणमहामालारत्नं वन्देऽनिलात्मजम् ॥ १३

अञ्जनानन्दनं वीरं जानकीशोकनाशनम् ।
कपीशमक्षहन्तारं वन्दे लङ्काभयङ्करम् ॥ १४

मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिरसा नमामि ॥

उल्लङ्घ्य सिन्धोः सलिलं सलीलं
यः शोकवह्निं जनकात्मजायाः ।

आदाय तेनैव ददाह लङ्कां
नमामि तं प्राञ्जलिराञ्जनेयम् ॥ १६

आञ्जनेयमतिपाटलाननं काञ्चनाद्रिकमनीयविग्रहम् ।
पारिजाततरुमूलवासिनं भावयामि पवमाननन्दनम् ॥ १७

यत्र यत्र रघुनाथकीर्तनं तत्र तत्र कृतमस्तकाञ्जलिम् ।
बाष्पवारिपरिपूर्णलोचनं मारुतिं नमत राक्षसान्तकम् ॥

वेदवेद्ये परे पुंसि जाते दशरथात्मजे ।
वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना ॥ १९

आपदामपहर्तारं दातारं सर्वसम्पदाम् ।
लोकाभिरामं श्रीरामं भूयो भूयो नमाम्यहम् ॥ २०

तदुपगतसमाससन्धियोगं सममधुरोपनतार्थवाक्यबद्धम् ।
रघुवरचरितं मुनिप्रणीतं दशशिरसश्च वधं निशामयध्वम् ॥

वैदेहीसहितं सुरद्रुमतले हैमे महामण्डपे
मध्ये पुष्पकमासने मणिमये वीरासने सुस्थितम् ।
अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनिभ्यः परं
व्याख्यान्तं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥

वन्दे वन्द्यं विधिभवमहेन्द्रादिवृन्दारकेन्द्रै-
र्व्यक्तं व्याप्तं स्वगुणगणतो देशतः कालतश्च ।

भूतावद्यं सुखचितिमयैर्मङ्गलैर्युक्तमङ्गैः
सानाथ्यं नो विदधदधिकं ब्रह्म नारायणाख्यम् ॥ २३

भूषारत्नं भुवनवलयस्याखिलाश्चर्यरत्नं
लीलारत्नं जलधिदुहितुर्देवतामौलिरत्नम् ।
चिन्तारत्नं जगति भजतां सत्सरोजद्युरत्नं
कौसल्याया लसतु मम हृन्मण्डले पुत्ररत्नम् ॥ २४

महाव्याकरणाम्भोधिमन्थमानसमन्दरम् ।
कवयन्तं रामकीर्त्या हनुमन्तमुपास्महे ॥ २५

मुख्यप्राणाय भीमाय नमो यस्य भुजान्तरम् ।
नानावीरसुवर्णानां निकषाश्मायितं बभौ ॥ २६

स्वान्तस्थानन्तशय्याय पूर्णज्ञानमहार्णसे ।
उत्तुङ्गवाक्तरङ्गाय मध्वदुग्धाब्धये नमः ॥ २७

वाल्मीकेर्गौः पुनीयान्नो महीधरपदाश्रया ।
यद्दुग्धमुपजीवन्ति कवयस्तर्णका इव ॥ २८

सूक्तिरत्नाकरे रम्ये मूलरामायणार्णवे ।
विहरन्तो महीयांसः प्रीयन्तां गुरवो मम ॥ २९

हयग्रीव हयग्रीव हयग्रीवेति यो वदेत् ।
तस्य निःसरते वाणी जह्नुकन्याप्रवाहवत् ॥ ३०

॥ श्रीः ॥

# ॥ श्रीमद्वाल्मीकिरामायणम् ॥

## अयोध्याकाण्डः ॥

### प्रथमः सर्गः ॥

गच्छता मातुलकुलं भरतेन तदाऽनघः ।
शत्रुघ्नो नित्यशत्रुघ्नो नीतः प्रीतिपुरस्कृतः ॥ १

स तत्र न्यवसद्भ्रात्रा सह सत्कारसत्कृतः ।
मातुलेनाश्वपतिना पुत्रस्नेहेन लालितः ॥ २

तत्रापि निवसन्तौ तौ तर्प्यमाणौ च कामतः ।
भ्रातरौ स्मरतां वीरौ वृद्धं दशरथं नृपम् ॥ ३

राजाऽपि तौ महाभागौ सस्मार प्रोषितौ सुतौ ।
उभौ भरतशत्रुघ्नौ महेन्द्रवरुणोपमौ ॥ ४

सर्वे एव तु तस्येष्टाश्चत्वारः पुरुषर्षभाः ।
स्वशरीराद्विनिर्वृत्ताश्चत्वार इव बाहवः ॥ ५

तेषामपि महातेजा रामो रतिकरः पितुः ।
स्वयम्भूरिव भूतानां बभूव गुणवत्तरः ॥ ६

स हि देवैरुदीर्णस्य रावणस्य वधार्थिभिः ।
अर्थितो मानुषे लोके जज्ञे विष्णुः सनातनः ॥ ७

कौसल्या शुशुभे तेन पुत्रेणामिततेजसा ।
यथा च देवी देवानामदितिर्वज्रपाणिना ॥ ८

स हि रूपोपपन्नश्च वीर्यवाननसूयकः ।
भूमावनुपमः सूनुर्गुणैर्दशरथोपमः ॥ ९

स तु नित्यं प्रशान्तात्मा मृदुपूर्वं च भाषते ।
उच्यमानोऽपि परुषं नोत्तरं प्रतिपद्यते ॥ १०

कथञ्चिदुपकारेण कृतेनैकेन तुष्यति ।
न स्मरत्यपकाराणां शतमप्यात्मवत्तया ॥ ११

शीलवृद्धैर्ज्ञानवृद्धैर्वयोवृद्धैश्च सज्जनैः ।
कथयन्नास्त वै नित्यमस्त्रयोग्यान्तरेष्वपि ॥ १२

बुद्धिमान्मधुराभाषी पूर्वभाषी प्रियंवदः ।
वीर्यवान् न च वीर्येण महता स्वेन विस्मितः ॥ १३

न चानृतकथो विद्वान् वृद्धानां प्रतिपूजकः ।
अनुरक्तः प्रजाभिश्च प्रजाश्चाप्यनुरज्जते ॥ १४

सानुक्रोशो जितक्रोधो ब्राह्मणप्रतिपूजकः ।
दीनानुकम्पी धर्मज्ञो नित्यं प्रग्रहवान् शुचिः ॥ १५

कुलोचितमतिः क्षात्रं धर्मं स्वं बहुमन्यते ।
मन्यते परया कीर्त्या महत्स्वर्गफलं ततः ॥ १६

नाश्रेयसि रतो यश्च न विरुद्धकथारुचिः ।
उत्तरोत्तरयुक्तौ च वक्ता वाचस्पतिर्यथा ॥ १७

अरोगस्तरुणो वाग्मी वपुष्मान्देशकालवित् ।
लोके पुरुषसारज्ञः साधुरेको विनिर्मितः ॥ १८

स तु श्रेष्ठैर्गुणैर्युक्तः प्रजानां पार्थिवात्मजः ।
बहिश्चर इव प्राणो बभूव गुणवत्तरः ॥ १९

सम्यग्विद्याव्रतस्नातो यथावत् साङ्गवेदवित् ।
इष्वस्त्रे च पितुः श्रेष्ठो बभूव भरताग्रजः ॥ २०

कल्याणाभिजनः साधुरदीनः सत्यवागृजुः ।
वृद्धैरभिविनीतश्च द्विजैर्धर्मार्थदर्शिभिः ॥ २१

धर्मकामार्थतत्त्वज्ञः स्मृतिमान्प्रतिभानवान् ।
लौकिके समयाचारे कृतकल्पो विशारदः ॥ २२

निभृतः संवृताकारो गुप्तमन्त्रः सहायवान् ।
अमोघक्रोधहर्षश्च त्यागसंयमकालवित् ॥ २३

दृढभक्तिः स्थिरप्रज्ञो नासद्ग्राही न दुर्वचाः ।
निस्तन्द्रिरप्रमत्तश्च स्वदोषपरदोषवित् ॥ २४

शास्त्रज्ञश्च कृतज्ञश्च पुरुषान्तरकोविदः ।
यः प्रग्रहानुग्रहयोर्यथान्यायं विचक्षणः ॥ २५

सत्संग्रहप्रग्रहणे स्थानविन्निग्रहस्य च ।
आयकर्मण्युपायज्ञः सन्दृष्टव्ययकर्मवित् ॥ २६

श्रैष्ठ्यं शास्त्रसमूहेषु प्राप्तो व्यामिश्रकेषु च ।
अर्थधर्मौ च संगृह्य सुखतन्त्रो न चालसः ॥ २७

वैहारिकाणां शिल्पानां विज्ञातार्थविभागवित् ।
आरोहे विनये चैव युक्तो वारणवाजिनाम् ॥ २८

धनुर्वेदविदां श्रेष्ठो लोकेऽतिरथसम्मतः ।
अभियाता प्रहर्ता च सेनानयविशारदः ॥ २९

अप्रधृष्यश्च संग्रामे क्रुद्धैरपि सुरासुरैः ॥ ३०

अनसूयो जितक्रोधो न दृप्तो न च मत्सरी ।
न चावमन्ता भूतानां न च कालवशानुगः ॥ ३१

एवं श्रेष्ठैर्गुणैर्युक्तः प्रजानां पार्थिवात्मजः ।
सम्मतस्त्रिषु लोकेषु वसुधायाः क्षमागुणैः ।
बुध्या बृहस्पतेस्तुल्यो वीर्येणापि शचीपतेः ॥ ३२

तथा सर्वप्रजाकान्तैः प्रीतिसंजननैः पितुः ।
गुणैर्विरुरुचे रामो दीप्तः सूर्य इवांशुभिः ॥ ३३

तमेवं गुणसम्पन्नमप्रधृष्यपराक्रमम् ।
लोकपालोपमं नाथमकामयत मेदिनी ॥ ३४

एतैस्तु बहुभिर्युक्तं गुणैरनुपमैः सुतम् ।
दृष्ट्वा दशरथो राजा चक्रे चिन्तां परन्तपः ॥ ३५

अथ राज्ञो बभूवैवं वृद्धस्य चिरजीविनः ।
प्रीतिरेषा कथं रामो राजास्यान्मयि जीवति ॥ ३६

एषा ह्यस्य परा प्रीतिर्हृदि संपरिवर्तते ।
कदा नाम सुतं द्रक्ष्याम्यभिषिक्तमहं प्रियम् ॥ ३७

वृद्धिकामो हि लोकस्य सर्वभूतानुकम्पनः ।
मत्तः प्रियतरो लोके पर्जन्य इव वृष्टिमान् ॥ ३८

यमशक्रसमो वीर्ये बृहस्पतिसमो मतौ ।
महीधरसमो धृत्यां मत्तश्च गुणवत्तरः ॥ ३९

महीमहमिमां कृत्स्नामधितिष्ठन्तमात्मजम् ।
अनेन वयसा दृष्ट्वा यथा स्वर्गमवाप्नुयाम् ॥ ४०

इत्येतैर्विविधैस्तैस्तैरन्यपार्थिवदुर्लभैः ।
शिष्टैरपरिमेयैश्च लोके लोकोत्तरैर्गुणैः ॥ ४१

तं समीक्ष्य महाराजो युक्तं समुदितैः शुभैः ।
निश्चित्य सचिवैः सार्धं युवराजममन्यत ॥ ४२

दिव्यन्तरिक्षे भूमौ च घोरमुत्पातजं भयम् ।
सञ्चचक्षे च मेधावी शरीरे चात्मनो जराम् ॥ ४३

पूर्णचन्द्राननस्याथ शोकापनुदमात्मनः ।
लोके रामस्य बुबुधे सम्प्रियत्वं महात्मनः ॥ ४४

आत्मनश्च प्रजानां च श्रेयसे च प्रियेण च ।
योक्तुकामः स धर्मात्मा भक्त्या त्वरितवान् नृपः ॥ ४५

नानानगरवास्तव्यान् पृथग्जानपदानपि ।
समानिनाय मेदिन्याः प्रधानान्पृथिवीपतीन् ॥ ४६

न तु केकयराजानं जनकं वा नराधिपम् ।
त्वरया चानयामास पश्चात्तौ श्रोष्यतः प्रियम् ॥ ४७

तान्वेश्म नानाभरणैर्यथार्हं प्रतिपूजितान् ।
ददर्शालंकृतो राजा प्रजापतिरिव प्रजाः ॥ ४८

अथोपविष्टे नृपतौ तस्मिन्परबलार्दने ।
ततः प्रविविशुः शेषा राजानो लोकसम्मताः ॥ ४९

अथ राज्ञा वितीर्णेषु विविधेष्वासनेषु च ।
राजानमेवाभिमुखा निषेदुर्नियता नृपाः ॥ ५०

स लब्धमानैर्विनयान्वितैर्नृपैः
पुरालयैर्जानपदैश्च मानवैः ।
उपोपविष्टैर्नृपतिर्वृतो बभौ
सहस्रचक्षुर्भगवानिवामरैः ॥ ५१

इति प्रथमः सर्गः ॥

## द्वितीयः सर्गः ॥

ततः परिषदं सर्वामामन्त्र्य वसुधाधिपः ।
हितमुद्धर्षणं चैवमुवाच प्रथितं वचः ॥ १

दुन्दुभिस्वनकल्पेन गम्भीरेणानुनादिना ।
स्वरेण महता राजा जीमूत इव नादयन् ॥ २

राजलक्षणयुक्तेन कान्तेनानुपमेन च ।
उवाच रसयुक्तेन स्वरेण नृपतिर्नृपान् ॥ ३

विदितं भवतामेतद्यथा मे राज्यमुत्तमम् ।
पूर्वकैर्मम राजेन्द्रैः सुतवत्परिपालितम् ॥ ४

सोऽहमिक्ष्वाकुभिः सर्वैर्नरेन्द्रैः परिपालितम् ।
श्रेयसा योक्तुकामोऽस्मि सुखार्हमखिलं जगत् ॥ ५

मयाप्याचरितं पूर्वैः पन्थानमनुगच्छता ।
प्रजा नित्यमनिद्रेण यथाशक्त्यभिरक्षिताः ॥ ६

इदं शरीरं कृत्स्नस्य लोकस्य चरता हितम् ।
पाण्डुरस्यातपत्रस्य छायायां जरितं मया ॥ ७

प्राप्य वर्षसहस्राणि बहून्यायूंषि जीवतः।
जीर्णस्यास्य शरीरस्य विश्रान्तिमभिरोचये ॥ ८

राजप्रभावजुष्टां हि दुर्वहामजितेन्द्रियैः।
परिश्रान्तोऽस्मि लोकस्य गुर्वीं धर्मधुरं वहन् ॥ ९

सोऽहं विश्रममिच्छामि पुत्रं कृत्वा प्रजाहिते।
सन्निकृष्टानिमान्सर्वाननुमान्य द्विजर्षभान् ॥ १०

अनुजातो हि मां सर्वैर्गुणैर्ज्येष्ठो ममात्मजः।
पुरन्दरसमो वीर्ये रामः परपुरञ्जयः ॥ ११

तं चन्द्रमिव पुष्येण युक्तं धर्मभृतां वरम्।
यौवराज्ये नियोक्तास्मि प्रीतः पुरुषपुङ्गवम् ॥ १२

अनुरूपः स वै नाथो लक्ष्मीवान् लक्ष्मणाग्रजः।
त्रैलोक्यमपि नाथेन येन स्यान्नाथवत्तरम् ॥ १३

अनेन श्रेयसा सद्यः संयोज्यैवमिमां महीम्।
गतक्लेशो भविष्यामि सुते तस्मिन्निवेश्य वै ॥ १४

यदीदं मेऽनुरूपार्थं मया साधु सुमन्त्रितम्।
भवन्तो मेनुमन्यन्तां कथं वा करवाण्यहम् ॥ १५

यद्यप्येषा मम प्रीतिर्हितमन्यद्विचिन्त्यताम् ।
अन्या मध्यस्थचिन्ता हि विमर्दाभ्यधिकोदया ॥ १६

इति ब्रुवन्तं मुदिताः प्रत्यनन्दन् नृपा नृपम् ।
वृष्टिमन्तं महामेघं नर्दन्त इव बर्हिणः ॥ १७

स्निग्धोऽनुनादी सञ्जज्ञे तत्र हर्षसमीरितः ।
जनौघोद्घुष्टसन्नादो विमानं कम्पयन्निव ॥ १८

तस्य तर्मार्थविदुषो भावमाज्ञाय सर्वशः ।
ब्राह्मणा बलमुख्याश्च पौरजानपदैः सह ॥ १९

समेत्य मन्त्रयित्वा तु समताङ्गतबुद्धयः ।
ऊचुश्च मनसा ज्ञात्वा वृद्धं दशरथं वचः ॥ २०

अनेकवर्षसाहस्रो वृद्धस्त्वमसि पार्थिव ।
स रामं युवराजानमभिषिञ्चस्व पार्थिवम् ॥ २१

इच्छामो हि महाबाहुं रघुवीरं महाबलम् ।
गजेन महताऽऽयान्तं रामं छत्रावृताननम् ॥ २२

इति तद्वचनं श्रुत्वा राजा तेषां मनःप्रियम् ।
अजानन्निव जिज्ञासुरिदं वचनमब्रवीत् ॥ २३

श्रुत्वैव वचनं यन्मे राघवं पतिमिच्छथ ।
राजानः संशयोऽयं मे किमिदं ब्रूत तत्त्वतः ॥ २४

कथं नु मयि धर्मेण पृथिवीमनुशासति ।
भवन्तो द्रष्टुमिच्छन्ति युवराजं ममात्मजम् ॥ २५

ते तमूचुर्महात्मानं पौरजानपदैः सह ।
बहवो नृप कल्याणा गुणाः पुत्रस्य सन्ति ते ॥ २६

गुणान्गुणवतो देव देवकल्पस्य धीमतः ।
प्रियानानन्दनान्कृत्स्नान् प्रवक्ष्यामोऽद्य तान्शृणु ॥ २७

दिव्यैर्गुणैः शक्रसमो रामः सत्यपराक्रमः ।
इक्ष्वाकुभ्योऽपि सर्वेभ्यो ह्यतिरिक्तो विशाम्पते ॥ २८

रामः सत्पुरुषो लोके सत्यधर्मपरायणः ।
साक्षाद्रामाद्विनिर्वृत्तो धर्मश्चापि श्रिया सह ॥ २९

प्रजासुखत्वे चन्द्रस्य वसुधायाः क्षमागुणैः ।
बुध्या बृहस्पतेस्तुल्यो वीर्ये साक्षाच्छचीपतेः ॥ ३०

धर्मज्ञः सत्यसन्धश्च शीलवाननसूयकः ।
क्षान्तः सान्त्वयिता श्लक्ष्णः कृतज्ञो विजितेन्द्रियः ।
मृदुश्च स्थिरचित्तश्च सदा भव्योऽनसूयकः ॥ ३१

प्रियवादी च भूतानां सत्यवादी च राघवः ।
बहुश्रुतानां वृद्धानां ब्राह्मणानामुपासिता ॥ ३२

तेनास्येहातुला कीर्तिर्यशस्तेजश्च वर्धते ।
देवासुरमनुष्याणां सर्वास्त्रेषु विशारदः ॥ ३३

सम्यग्विद्याव्रतस्नातो यथावत्साङ्गवेदवित् ।
गान्धर्वे च भुवि श्रेष्ठो बभूव भरताग्रजः ॥ ३४

कल्याणाभिजनः साधुरदीनात्मा महाद्युतिः ।
द्विजैरभिविनीतश्च श्रेष्ठैर्धर्मार्थनैपुणैः ॥ ३५

यदा व्रजति संग्रामं ग्रामार्थे नगरस्य वा ।
गत्वा सौमित्रिसहितो नाविजित्य निवर्तते ॥ ३६

संग्रामात्पुनरागम्य कुञ्जरेण रथेन वा ।
पौरान् स्वजनवन्नित्यं कुशलं परिपृच्छति ॥ ३७

पुत्रेष्वग्निषु दारेषु प्रेष्यशिष्यगणेषु च ।
निखिलेनानुपूर्व्याच्च पिता पुत्रानिवौरसान् ॥ ३८

शुश्रूषन्ते च वः शिष्याः कच्चित्कर्मसु दंशिताः ।
इति नः पुरुषव्याघ्रः सदा रामोऽभिभाषते ॥ ३९

व्यसनेषु मनुष्याणां भृशं भवति दुःखितः ।
उत्सवेषु च सर्वेषु पितेव परितुष्यति ॥ ४०

सत्यवादी महेष्वासो वृद्धसेवी जितेन्द्रियः ।
स्मितपूर्वाभिभाषी च धर्मं सर्वात्मना श्रितः ॥ ४१

सम्यग्योक्ता श्रेयसां च न विगृह्यकथारुचिः ।
उत्तरोत्तरयुक्तौ च वक्ता वाचस्पतिर्यथा ॥ ४२

सुभ्रुरायतताम्राक्षः साक्षाद्विष्णुरिव स्वयम् ।
रामो लोकाभिरामोऽयं शौर्यवीर्यपराक्रमैः ॥ ४३

प्रजापालनतत्त्वज्ञो न रागोपहतेन्द्रियः ।
शक्तस्त्रैलोक्यमप्येषो भोक्तुं किं नु महीमिमाम् ॥ ४४

नास्य क्रोधः प्रसादश्च निरर्थोऽस्ति कदाचन ।
हन्त्येव नियमाद्वध्यान् यत्नैष परिकुप्यति ॥ ४५

युनक्त्यर्थैः प्रहृष्टश्च तमसौ यत्र तुष्यति ॥ ४६

दान्तैः सर्वप्रजाकान्तैः प्रीतिसञ्जननैर्नृणाम् ।
गुणैर्विरुरुचे रामो दीप्तः सूर्य इवांशुभिः ॥ ४७

तमेवं गुणसम्पन्नं रामं सत्यपराक्रमम् ।
लोकपालोपमं नाथमकामयत मेदिनी ॥ ४८

वत्सः श्रेयसि जातस्ते दिष्ट्याऽसौ तव राघव ।
दिष्ट्या पुत्रगुणैर्युक्तो मारीच इव काश्यपः ॥ ४९

बलमारोग्यमायुश्च रामस्य विदितात्मनः ।
देवासुरमनुष्येषु सगन्धर्वोरगेषु च ॥ ५०

आशंसते जनः सर्वो राष्ट्रे पुरवरे तथा ।
आभ्यन्तरश्च बाह्यश्च पौरजानपदो जनः ॥ ५१

स्त्रियो वृद्धास्तरुण्यश्च सायंप्रातः समाहिताः ।
सर्वान्देवान्नमस्यन्ति रामस्यार्थे यशस्विनः ॥ ५२

तेषामभिमतं देव त्वत्प्रसादात्समृध्यताम् ॥ ५३

राममिन्दीवरश्यामं सर्वशत्रुनिबर्हणम् ।
पश्यामो यौवराज्यस्थं तव राजोत्तमात्मजम् ॥ ५४

तं देवदेवोपममात्मजं ते
सर्वस्य लोकस्य हिते निविष्टम् ।
हिताय नः क्षिप्रमुदारजुष्टं
मुदाऽभिषेक्तुं वरद त्वमर्हसि ॥ ५५

इति द्वितीयः सर्गः ॥

## तृतीयः सर्गः ॥

तेषामञ्जलिपद्मानि प्रगृहीतानि सर्वशः ।
प्रतिगृह्याब्रवीद्राजा तेभ्यः प्रियहितं वचः ॥ १

अहोऽस्मि परमप्रीतः प्रभावश्चातुलो मम ।
जन्मे ज्येष्ठं प्रियं पुत्रं यौवराज्यस्थमिच्छथ ॥ २

इति प्रत्यर्च्य तान् राजा ब्राह्मणानिदमब्रवीत् ।
वसिष्ठं वामदेवं च तेषामेवोपशृण्वताम् ॥ ३

चैत्रः श्रीमानयं मासः पुण्यः पुष्पितकाननः ।
यौवराज्याय रामस्य सर्वमेवोपकल्प्यताम् ॥ ४

राज्ञस्तुपरते वाक्ये जनघोषो महानभूत् ।
शनैस्तस्मिन् प्रशान्ते च जनघोषे नराधिपः ।
वसिष्ठं मुनिशार्दूलं राजा वचनमब्रवीत् ॥ ५

अभिषेकाय रामस्य यत्कर्म सपरिच्छदम् ।
तदद्य भगवन्सर्वमाज्ञापयितुमर्हसि ॥ ६

तच्छ्रुत्वा भूमिपालस्य वसिष्ठो द्विजसत्तमः ।
आदिदेशाग्रतो राज्ञः स्थितान् युक्तान्कृताञ्जलीन् ॥ ७

सुवर्णादीनि रत्नानि बलीन्सर्वौषधीरपि ।
शुक्लमाल्यांश्च लाजांश्च पृथक् च मधुसर्पिषी ॥ ८

अहतानि च वासांसि रथं सर्वायुधान्यपि ।
चतुरङ्गबलं चैव गजं च शुभलक्षणम् ॥ ९

चामरव्यजने चोभे ध्वजं छत्रं च पाण्डुरम् ।
शतं च शातकुम्भानां कुम्भानामग्निवर्चसाम् ॥ १०

हिरण्यशृङ्गमृषभं समग्रं व्याघ्रचर्म च ।
यच्चान्यत् किञ्चिदेष्टव्यं तत्सर्वमुपकल्प्यताम् ॥ ११

उपस्थापयत प्रातरग्न्यगारं महीपतेः ॥ १२

अन्तःपुरस्य द्वाराणि सर्वस्य नगरस्य च ।
चन्दनस्रग्भिरर्च्यन्तां धूपैश्च घ्राणहारिभिः ॥ १३

प्रशस्तमन्नं घृतवद्दधिक्षीरोपसेचनम् ।
द्विजानां शतसाहस्रे यत्प्रकाममलं भवेत् ॥ १४

सत्कृत्य द्विजमुख्यानां श्वः प्रभाते प्रदीयताम् ।
घृतं दधि च लाजाश्च दक्षिणाश्चापि पुष्कलाः ॥ १५

सूर्येऽभ्युदितमात्रे श्वो भविता स्वस्तिवाचनम् ।
ब्राह्मणाश्च निमन्त्र्यन्तां कल्प्यन्तामासनानि च ॥ १६

आबध्यन्तां पताकाश्च राजमार्गश्च सिच्यताम् ॥ १७

सर्वे च तालावचरा गणिकाश्च स्वलंकृताः ।
कक्ष्यां द्वितीयामासाद्य तिष्ठन्तु नृपवेश्मनः ॥ १८

देवायतनचैत्येषु सान्नभक्षाः सदक्षिणाः ।
उपस्थापयितव्याः स्युर्माल्ययोग्याः पृथक् पृथक् ॥ १९

दीर्घासिबद्धा योधाश्च सन्नद्धा मृष्टवाससः ।
महाराजाङ्गणं सर्वे प्रविशन्तु महोदयम् ॥ २०

एवं व्यादिश्य विप्रौ तौ क्रियास्तत्र विनिष्ठितौ ।
चक्रतुश्चैव यच्छेषं पार्थिवाय निवेद्य च ॥ २१

कृतमित्येव चाब्रूतामभिगम्य जगत्पतिम् ।
यथोक्तवचनं प्रीतौ हर्षयुक्तौ द्विजर्षभौ ॥ २२

ततः सुमन्त्रं द्युतिमान् राजा वचनमब्रवीत् ।
रामः कृतात्मा भवता शीघ्रमानीयतामिति ॥ २३

स तथेति प्रतिज्ञाय सुमन्त्रो राजशासनात् ।
रामं तत्रानयाञ्चक्रे रथेन रथिनां वरम् ॥ २४

अथ तत्र समासीनास्तदा दशरथं नृपम् ।
प्राच्योदीच्याः प्रतीच्याश्च दाक्षिणात्याश्च भूमिपाः ॥

म्लेच्छाचार्याश्च ये चान्ये वनशैलान्तवासिनः ।
उपासाञ्चक्रिरे सर्वे तं देवा इव वासवम् ॥ २६

तेषां मध्ये स राजर्षिर्मरुतामिव वासवः ।
प्रासादस्थो रथगतं ददर्शायान्तमात्मजम् ॥ २७

गन्धर्वराजप्रतिमं लोके विख्यातपौरुषम् ।
दीर्घबाहुं महासत्त्वं मत्तमातङ्गगामिनम् ॥ २८

चन्द्रकान्ताननं राममतीव प्रियदर्शनम् ।
रूपौदार्यगुणैः पुंसां दृष्टिचित्तापहारिणम् ॥ २९

धर्माभितप्ताः पर्जन्यं ह्लादयन्तमिव प्रजाः ।
न ततर्प समायान्तं पश्यमानो नराधिपः ॥ ३०

अवतार्य सुमन्त्रस्तं राघवं स्यन्दनोत्तमात् ।
पितुः समीपं गच्छन्तं प्राञ्जलिः पृष्ठतोऽन्वगात् ॥ ३१

स तं कैलासशृङ्गाभं प्रासादं रघुपुङ्गवः ।
आरुरोह नृपं द्रष्टुं सह सूतेन राघवः ॥ ३२

स प्राञ्जलिरभिप्रेत्य प्रणतः पितुरन्तिके ।
नाम स्वं श्रावयन् रामो ववन्दे चरणौ पितुः ॥ ३३

तं दृष्ट्वा प्रणतं पार्श्वे कृताञ्जलिपुटं नृपः ।
गृह्याञ्जलौ समाकृष्य सस्वजे प्रियमात्मजम् ॥ ३४

तस्मै चाभ्युदितं सम्यङ्मणिकाञ्चनभूषितम् ।
दिदेश राजा रुचिरं रामाय परमासनम् ॥ ३५

तदासनवरं प्राप्य व्यदीपयत राघवः ।
स्वयैव प्रभया मेरुमुदये विमलो रविः ॥ ३६

तेन विभ्राजता तत्र सा सभाऽपि व्यरोचत ।
विमलग्रहनक्षत्रा शारदी द्यौरिवेन्दुना ॥ ३७

तं पश्यमानो नृपतिस्तुतोष प्रियमात्मजम् ।
अलंकृतमिवात्मानमादर्शतलसंस्थितम् ॥ ३८

स तं सस्मितमाभाष्य पुत्रं पुत्रवतां वरः ।
उवाचेदं वचो राजा देवेन्द्रमिव कश्यपः ॥ ३९

ज्येष्ठायां मे धर्मपत्न्यां सदृश्यां सदृशः सुतः ।
उत्पन्नस्त्वं गुणश्रेष्ठो मम रामात्मजः प्रियः ॥ ४०

यतस्त्वया प्रजाश्चेमाः स्वगुणैरनुरञ्जिताः ।
तस्मात्त्वं पुष्ययोगेन यौवराज्यमवाप्नुहि ॥ ४१

कामतस्त्वं प्रकृत्यैव विनीतो गुणवानसि ।
गुणवत्यपि तु स्नेहात् पुत्र वक्ष्यामि ते हितम् ॥ ४२

भूयो विनयमास्थाय भव नित्यं जितेन्द्रियः ।
कामक्रोधसमुत्थानि त्याजेथा व्यसनानि च ॥ ४३

परोक्षया वर्तमानो वृत्त्या प्रत्यक्षया तथा ।
अमात्यप्रभृतीः सर्वाः प्रकृतीश्चानुरञ्जय ॥ ४४

कोष्ठागारायुधागारैः कृत्वा सन्निचयान्बहून् ।
तुष्टानुरक्तप्रकृतिर्यः पालयति मेदिनीम् ॥ ४५

तस्य नन्दन्ति मित्राणि लब्ध्वाऽमृतमिवामराः ।
तस्माद् त्वमपि चात्मानं नियम्यैवं समाचर ॥ ४६

तच्छ्रुत्वा सुहृदस्तस्य रामस्य प्रियकारिणः ।
त्वरिताः शीघ्रमभ्येत्य कौसल्यायै न्यवेदयन् ॥ ४७

सा हिरण्यं च गाश्चैव रत्नानि विविधानि च ।
व्यादिदेश प्रियाख्येभ्यः कौसल्या प्रमदोत्तमा ॥ ४८

अथाभिवाद्य राजानं रथमारुह्य राघवः ।
ययौ स्वं द्युतिमद्वेश्म जनौघैः प्रतिपूजितः ॥ ४९

ते चापि पौरा नृपतेर्वचस्त-
च्छ्रुत्वा तदा लाभमिवेष्टमाशु ।
नरेन्द्रमामन्त्र्य गृहाणि गत्वा
देवान्समानर्चुरभिप्रहृष्टाः ॥ ५०

इति तृतीयः सर्गः ॥

## चतुर्थः सर्गः ॥

गतेष्वथ नृपो भूयः पौरेषु सह मन्त्रिभिः ।
मन्त्रयित्वा ततश्चक्रे निश्चयज्ञः सुनिश्चयम् ॥ १

श्व एव पुष्यो भविता श्वोऽभिषिञ्चन्तु मे सुतम् ।
रामो राजीवताम्राक्षो युवराज इति प्रभुः ॥ २

अथान्तर्गृहमाविश्य राजा दशरथस्तदा ।
सूतमामन्त्रयामास रामं पुनरिहानय ॥ ३

प्रतिगृह्य स तद्वाक्यं सूतः पुनरुपाययौ ।
रामस्य भवनं शीघ्रं राममानयितुं पुनः ॥ ४

द्वास्थैरावेदितं तस्य रामायागमनं पुनः ।
श्रुत्वैव चापि रामस्तं प्राप्तं शङ्कान्वितोऽभवत् ॥ ५

प्रवेश्य चैनं त्वरितं रामो वचनमब्रवीत् ।
यदागमनकृत्यं ते भूयस्तद्ब्रूह्यशेषतः ॥ ६

तमुवाच ततः सूतो राजा त्वां द्रष्टुमिच्छति ।
श्रुत्वा प्रमाणं तत्र त्वं गमनायेतराय वा ॥ ७

इति सूतवचः श्रुत्वा रामोऽथ त्वरयाऽन्वितः ।
प्रययौ राजभवनं पुनर्द्रष्टुं नरेश्वरम् ॥ ८

तं श्रुत्वा समनुप्राप्तं रामं दशरथो नृपः ।
प्रवेशयामास गृहं विवक्षुः प्रियमुत्तमम् ॥ ९

प्रविशन्नेव च श्रीमान् राघवो भवनं पितुः ।
ददर्श पितरं दूरात्प्रणिपत्य कृताञ्जलिः ॥ १०

प्रणमन्तं समुत्थाप्य परिष्वज्य स भूमिपः ।
प्रदिश्य चास्मै रुचिरमासनं पुनरब्रवीत् ॥ ११

राम वृद्धोऽस्मि दीर्घायुर्भुक्ता भोगा मयेप्सिताः ।
अन्नवद्भिः क्रतुशतैर्यथेष्टं भूरिदक्षिणैः ॥ १२

जातमिष्टमपत्यं मे त्वमद्यानुपमं भुवि ।
दत्तमिष्टमधीतं च मया पुरुषसत्तम ॥ १३

अनुभूतानि चेष्टानि मया वीरसुखान्यपि ।
देवर्षिपितृविप्राणामनृणोऽस्मि तथाऽऽत्मनः ॥ १४

न किञ्चिन्मम कर्तव्यं तवान्यत्राभिषेचनात् ।
अतो यत्त्वामहं ब्रूयां तन्मे त्वं कर्तुमर्हसि ॥ १५

अद्य प्रकृतयः सर्वास्त्वामिच्छन्ति नराधिपम् ।
अतस्त्वां युवराजानमभिषेक्ष्यामि पुत्रक ॥ १६

अपि चाद्याशुभान् राम स्वप्ने पश्यामि दारुणान् ।
सनिर्घाता महोल्का च पतितेह महास्वना ॥ १७

अवष्टब्धं च मे राम नक्षत्रं दारुणैर्ग्रहैः ।
आवेदयन्ति दैवज्ञाः सूर्याङ्गारकराहुभिः ॥ १८

प्रायेण च निमित्तानामीदृशानां समुद्भवे ।
राजा हि मृत्युमाप्नोति घोरां वाऽऽपदमृच्छति ॥ १९

यद्यावदेव मे चेतो न विमुञ्चति राघव ।
तावदेवाभिषिञ्चस्व चला हि प्राणिनां मतिः ॥ २०

अद्य चन्द्रोऽभ्युपगतः पुष्यात्पूर्वं पुनर्वसुम् ।
श्वः पुष्ययोगं नियतं वक्ष्यन्ते दैवचिन्तकाः ॥ २१

तत्र पुष्येऽभिषक्तस्त्वं मनस्त्वरयतीव माम् ।
श्वस्त्वाऽहमभिषेक्ष्यामि यौवराज्ये परन्तप ॥ २२

तस्मात्त्वयाऽद्य व्रतिना निशेयं नियतात्मना ।
सह वध्वोपवस्तव्या दर्भप्रस्तरशायिना ॥ २३

सुहृदश्चाप्रमत्तास्त्वां रक्षन्त्वद्य समन्ततः ।
भवन्ति बहु विघ्नानि कार्याण्येवंविधानि हि ॥ २४

विप्रोषितश्च भरतो यावदेव पुरादितः ।
तावदेवाभिषेकस्ते प्राप्तकालो मतो मम ॥ २५

कामं खलु सतां वृत्ते भ्राता ते भरतः स्थितः ।
ज्येष्ठानुवर्ती धर्मात्मा सानुक्रोशो जितेन्द्रियः ॥ २६

किन्तु चित्तं मनुष्याणामनित्यमिति मे मतिः ।
सतां च धर्मनित्यानां कृतशोभि च राघवः ॥ २७

इत्युक्तः सोऽभ्यनुज्ञातः श्वो भाविन्यभिषेचने ।
व्रजेति रामः पितरमभिवाद्याभ्ययाद्गृहम् ॥ २८

प्रविश्य चात्मनो वेश्म राज्ञोद्दिष्टेऽभिषेचने ।
तस्मिन्क्षणे न निर्गम्य मातुरन्तःपुरं ययौ ॥ २९

तत्र तां प्रवणामेव मातरं क्षौमवासिनीम् ।
वाग्यतां देवतागारे ददर्शायाचतीं श्रियम् ॥ ३०

प्रागेव चागता तत्र सुमित्रा लक्ष्मणस्तथा ।
सीता चानायिता श्रुत्वा प्रियं रामाभिषेचनम् ॥ ३१

तस्मिन्काले च कौसल्या तस्थावामीलितेक्षणा ।
सुमित्रयाऽन्वास्यमाना सीतया लक्ष्मणेन च ॥ ३२

श्रुत्वा पुष्येण पुत्रस्य यौवराज्याभिषेचनम् ।
प्राणायामेन पुरुषं ध्यायमाना जनार्दनम् ॥ ३३

तथा सनियमामेव सोऽभिगम्याभिवाद्य च ।
उवाच वचनं रामो हर्षयंस्तामनिन्दिताम् ॥ ३४

अम्ब पित्रा नियुक्तोऽस्मि प्रजापालनकर्मणि ।
भविता श्वोऽभिषेको मे यथा मे शासनं पितुः ॥ ३५

सीतयाऽप्युपवस्तव्या रजनीयं मया सह ।
एवमृत्विगुपाध्यायैः सह मामुक्तवान् पिता ॥ ३६

यानि यान्यत्र योग्यानि श्वो भाविन्यभिषेचने ।
तानि मे मङ्गलान्यद्य वैदेह्याश्चैव कारय ॥ ३७

एतच्छ्रुत्वा तु कौसल्या चिरकालाभिकांक्षितम् ।
हर्षबाष्पकलं वाक्यमिदं राममभाषत ॥ ३८

वत्स राम चिरं जीव हतास्ते परिपन्थिनः ।
ज्ञातीन्मे त्वं श्रिया युक्तः सुमित्रायाश्च नन्दय ॥ ३९

कल्याणे बत नक्षत्रे मयि जातोऽसि पुत्रक ।
येन त्वया दशरथो गुणैराराधितः पिता ॥ ४०

अमोघं बत मे क्षान्तं पुरुषे पुष्करेक्षणे ।
येयमिक्ष्वाकुराज्यश्रीः पुत्र त्वां संश्रयिष्यति ॥ ४१

इत्येवमुक्तो मात्रेदं रामो भ्रातरमब्रवीत् ।
प्राञ्जलिं प्रह्वमासीनमभिवीक्ष्य स्मयन्निव ॥ ४२

लक्ष्मणेमां मया सार्धं प्रशाधि त्वं वसुन्धराम् ।
द्वितीयं मेऽन्तरात्मानं त्वामियं श्रीरुपस्थिता ॥ ४३

सौमित्रे भुङ्क्ष्व भोगांस्त्वमिष्टान् राज्यफलानि च ।
जीवितं च हि राज्यं च त्वदर्थमभिकामये ॥ ४४

इत्युक्त्वा लक्ष्मणं रामो मातरावभिवाद्य च ।
अभ्यनुज्ञाप्य सीतां च जगाम स्वं निवेशनम् ॥ ४५

इति चतुर्थः सर्गः ॥

## पञ्चमः सर्गः ॥

सन्दिश्य रामं नृपतिः श्वो भाविन्यभिषेचने ।
पुरोहितं समाहूय वसिष्ठमिदमब्रवीत् ॥ १

गच्छोपवासं काकुत्स्थं कारयाद्य तपोधन ।
श्रीयशोराज्यलाभाय वध्वा सह यतव्रतम् ॥ २

तथेति च स राजानमुक्त्वा वेदविदां वरः ।
स्वयं वसिष्ठो भगवान् ययौ रामनिवेशनम् ॥ ३

उपवासयितुं रामं मन्त्रविन्मन्त्रपारगः ।
ब्राह्मं रथवरंयुक्तमास्थाय सुधृतव्रतः ॥ ४

स रामभवनं प्राप्य पाण्डुराभ्रसमप्रभम् ।
तिस्रः कक्ष्या रथेनैव विवेश मुनिसत्तमः ॥ ५

तमागतमृषिं रामस्त्वरन्निव ससंभ्रमः ।
मानयिष्यन् स मानार्हं निश्चक्राम निवेशनात् ॥ ६

अभ्येत्य त्वरमाणश्च रथाभ्याशं मनीषिणः ।
ततोऽवतारयामास परिगृह्य रथात्स्वयम् ॥ ७

स चैनं प्रश्रितं दृष्ट्वा संभाष्याभिप्रसाद्य च ।
प्रियार्हं हर्षयन् राममित्युवाच पुरोहितः ॥ ८

प्रसन्नस्ते पिता राम यौवराज्यमवाप्स्यसि ।
उपवासं भवानद्य करोतु सह सीतया ॥ ९

प्रातस्त्वामभिषेक्ता हि यौवराज्ये नराधिपः ।
पिता दशरथः प्रीत्या ययातिं नहुषो यथा ॥ १०

इत्युक्त्वा स तदा राममुपवासं यतव्रतम् ।
मन्त्रवत्कारयामास वैदेह्या सहितं मुनिः ॥ ११

ततो यथावद्रामेण स राज्ञे गुरुरर्चितः ।
अभ्यनुज्ञाप्य काकुत्स्थं ययौ रामनिवेशनात् ॥ १२

सुहृद्भिस्तत्र रामोऽपि सुखासीनः प्रियंवदैः ।
सभाजितो विवेशाथताननुज्ञाप्य सर्वशः ॥ १३

हृष्टनारीनरयुतं रामवेश्म तदा बभौ ।
यथा मत्तद्विजगणं प्रफुल्लनलिनं सरः ॥ १४

स राजभवनप्रख्यात् तस्माद्रामनिवेशनात् ।
निःसृत्य ददृशे मार्गं वसिष्ठो जनसंवृतम् ॥ १५

बृन्दंबृन्दमयोध्यायां राजमार्गाः समन्ततः ।
बभूवुरतिसंबाधाः कुतूहलजनैर्वृताः ॥ १६

जनबृन्दोर्मिसङ्घर्षहर्षस्वनवतस्तदा ।
बभूव राजमार्गस्य सागरस्येव निस्वनः ॥ १७

सिक्तसम्मृष्टरथ्या सा तदाऽथ वनमालिनी ।
आसीदयोध्या नगरी समुच्छ्रितगृहध्वजा ॥ १८

तदा ह्ययोध्यानिलयः सस्त्रीबालाखिलो जनः ।
रामाभिषेकमाकांक्षन्नाकांक्षदुदयं रवेः ॥ १९

प्रजाऽलङ्कारभूतं च जनस्यानन्दवर्धनम् ।
उत्सुकोऽभूज्जनो द्रष्टुं तमयोध्यामहोत्सवम् ॥ २०

एवं तं जनसंबाधं राजमार्गं पुरोहितः ।
व्यूहन्निव जनौघं तं शनैः राजकुलं ययौ ॥ २१

शुभ्राभ्रशिखरप्रख्यं प्रासादमधिरुह्य सः ।
समीयाय नरेन्द्रेण शक्रेणेव बृहस्पतिः ॥ २२

तमागतमभिप्रेक्ष्य हित्वा राजासनं नृपः ।
पप्रच्छ स च तस्मै तत् कृतमित्यभ्यवेदयत् ॥ २३

तेन चैव तदा तुल्यं सहासीनाः सभासदः ।
आसनेभ्यः समुत्तस्थुः पूजयन्तः पुरोहितम् ॥ २४

गुरुणा त्वभ्यनुज्ञातो मनुजौघं विसृज्य तम् ।
विवेशान्तःपुरं राजा सिंहो गिरिगुहामिव ॥ २५

तदग्र्यवेषप्रमदाजनाकुलं
महेन्द्रवेश्मप्रतिमं निवेशनम् ।
विदीपयंश्चारु विवेश पार्थिवः
शशीव तारागणसङ्कुलं नभः ॥ २६

इति पञ्चमः सर्गः ॥

## षष्ठः सर्गः ॥

गते पुरोहिते रामः स्नातो नियतमानसः ।
सह पत्न्या विशालाक्ष्या नारायणमुपागमत् ॥ १

प्रगृह्य शिरसा पात्रीं हविषो विधिवत्ततः ।
महते दैवतायाज्यं जुहाव ज्वलितेऽनले ॥ २

शेषं च हविषस्तस्य प्राश्याशास्यात्मनः प्रियम् ।
ध्यायन्नारायणं देवं स्वास्तीर्णे कुशसंस्तरे ॥ ३

वाग्यतः सह वैदेह्या भूत्वा नियतमानसः ।
श्रीमत्यायतने विष्णोः शिश्ये नरवरात्मजः ॥ ४

एकयामावशिष्टायां रात्र्यां प्रतिविबुध्य सः ।
अलङ्कारविधिं कृत्स्नं कारयामास वेश्मनः ॥ ५

तत्र शृण्वन्सुखा वाचः सूतमागधवन्दिनाम् ।
पूर्वां सन्ध्यामुपासीनो जजाप यतमानसः ॥ ६

तुष्टाव प्रणतश्चैव शिरसा मधुसूदनम् ।
विमलक्षौमसंवीतो वाचयामास च द्विजान् ॥ ७

तेषां पुण्याहघोषोऽथ गम्भीरमधुरस्तदा ।
अयोध्यां पूरयामास तूर्यघोषानुनादितः ॥ ८

कृतोपवासं तु तदा वैदेह्या सह राघवम् ।
अयोध्यानिलयः श्रुत्वा सर्वः प्रमुदितो जनः ॥ ९

ततः पौरजनः सर्वः श्रुत्वा रामाभिषेचनम् ।
प्रभातां रजनीं दृष्ट्वा चक्रे शोभयितुं पुरीम् ॥ १०

सिताभ्रशिखराभेषु देवतायतनेषु च ।
चतुष्पथेषु रथ्यासु चैत्येष्वट्टालकेषु च ॥ ११

नानापण्यसमृद्धेषु वणिजामापणेषु च ।
कुटुम्बिनां नमृद्धेषु श्रीमत्सु भवनेषु च ॥ १२

सभासु चैव सर्वासु वृक्षेष्वालक्षितेषु च ।
ध्वजाः समुच्छ्रिताः साधु पताकाश्चाभवंस्तदा ॥ १३

नटनर्तकसङ्घानां गायकानां च गायताम् ।
मनःकर्णसुखा वाचः शुश्रुवुश्च ततस्ततः ॥ १४

रामाभिषेकयुक्ताश्च कथाश्चक्रुर्मिथो जनाः ।
रामाभिषेके सम्प्राप्ते चत्वरेषु गृहेषु च ॥ १५

बाला अपि क्रीडमानाः गृहद्वारेषु सङ्घशः ॥ १६

कृतपुष्पोपहारश्च धूपगन्धाधिवासितः ।
राजमार्गः कृतः श्रीमान् पौरे रामाभिषेचने ॥ १७

प्रकाशीकरणार्थं च निशागमनशङ्कया ।
दीपवृक्षांस्तथा चक्रुरनुरथ्यासु सर्वशः ॥ १८

अलङ्कारं पुरस्येवं कृत्वा तत्पुरवासिनः ।
आकांक्षमाणा रामस्य यौवराज्याभिषेचनम् ॥ १९

समेत्य सङ्घशः सर्वे चत्वरेषु सभासु च ।
कथयन्तो मिथस्तत्र प्रशशंसुर्जनाधिपम् ॥ २०

अहो महात्मा राजाऽयमिक्ष्वाकुकुलनन्दनः ।
ज्ञात्वा यो वृद्धमात्मानं रामं राज्येऽभिषेक्ष्यति ॥ २१

सर्वे ह्यनुगृहीताः स्मो यन्नो रामो महीपतिः ।
चिराय भविता गोप्ता दृष्टलोकपरावरः ॥ २२

अनुद्धतमना विद्वान् धर्मात्मा भ्रातृवत्सलः ।
यथा च भ्रातृषु स्निग्धस्तथाऽस्मास्वपि राघवः ॥ २३

चिरं जीवतु धर्मात्मा राजा दशरथोऽनघः ।
यत्प्रसादेनाभिषिक्तं रामं द्रक्ष्यामहे वयम् ॥ २४

एवंविधं कथयतां पौराणां शुश्रुवुस्तदा ।
दिग्भ्योऽपि श्रुतवृत्तान्ताः प्राप्ता जानपदा जनाः ॥ २५

ते तु दिग्भ्यः पुरीं प्राप्ता द्रष्टुं रामाभिषेचनम् ।
रामस्य पूरयामासुः पुरीं जानपदा जनाः ॥ २६

जनौघैस्तैर्विसर्पद्भिः शुशुभे तत्र निस्वनः ।
पर्वसूदीर्णवेगस्य सागरस्येव निस्वनः ॥ २७

ततस्तदिन्द्रक्षयसन्निभं पुरं
दिदृक्षुभिर्जानपदैरुपागतैः ।
समन्ततः सस्वनमाकुलं बभौ
समुद्रयादोभिरिवार्णवोदकम् ॥ २८

इति षष्ठः सर्गः ॥

## सप्तमः सर्गः ॥

ज्ञातिदासी यतोजाता कैकेय्यास्तु सहोषिता ।
प्रासादं चन्द्रसङ्काशमारुरोह यदृच्छया ॥ १

सिक्तराजपथां रम्यां प्रकीर्णकुसुमोत्कराम् ।
अयोध्यां मन्थरा तस्मात् प्रासादादन्ववैक्षत ॥ २

पताकाभिर्वरार्हाभिर्ध्वजैश्च समलंकृताम् ।
सिक्तां चन्दनतोयैश्च शिरस्नोतजनैर्युताम् ॥ ३

माल्यमोदकहस्तैश्च द्विजेन्द्रैरभिनादिताम् ।
शुक्लदेवगृहद्वारां सर्ववादित्रनिस्वनाम् ॥ ४

संप्रहृष्टजनाकीर्णां ब्रह्मघोषाभिनादिताम् ।
प्रहृष्टवरहस्त्यश्वां सम्प्रणर्दितगोवृषाम् ॥ ५

प्रहृष्टमुदितैः पौरैरुच्छ्रितध्वजमालिनीम् ।
अयोध्यां मन्थरा दृष्ट्वा परं विस्मयमागता ॥ ६

सा हर्षोत्फुल्लनयनां पाण्डुरक्षौमवासिनीम् ।
अविदूरे स्थितां दृष्ट्वा धात्रीं पप्रच्छ मन्थरा ॥ ७

उत्तमेनाभिसंयुक्ता हर्षेणार्थपरा सती ।
राममाता धनं किं नु जनेभ्यः संप्रयच्छति ॥ ८

अतिमात्रं प्रहर्षोऽयं किं जनस्य च शंस मे ।
कारयिष्यति किं वाऽपि संप्रहृष्टो महीपतिः ॥ ९

विदीर्यमाणा हर्षेण धात्री तु परया मुदा ।
आचचक्षेऽथ कुब्जायै भूयसीं राघवश्रियम् ॥ १०

श्वः पुष्येण जितक्रोधं यौवराज्येन राघवम् ।
राजा दशरथो राममभिषेचयिताऽनघम् ॥ ११

धात्र्यास्तु वचनं श्रुत्वा कुब्जा क्षिप्रममर्षिता ।
कैलासशिखराकारात् प्रासादादवरोहत ॥ १२

सा दह्यमाना कोपेन मन्थरा पापदर्शिनी ।
शयानामेत्य कैकेयीमिदं वचनमब्रवीत् ॥ १३

उत्तिष्ठ मूढे किं शेषे भयं त्वामभिवर्तते ।
उपप्लुतमघौघेन किमात्मानं न बुध्यसे ॥ १४

अनिष्टे सुभगाकारे सौभाग्येन विकत्थसे ।
चलं हि तव सौभाग्यं नद्याः स्रोत इवोष्णगे ॥ १५

एवमुक्ता तु कैकेयी रुष्टया परुषं वचः ।
कुब्जया पापदर्शिन्या विषादमगमत्परम् ॥ १६

कैकेयी त्वब्रवीत्कुब्जां कच्चित्क्षेमं न मन्थरे ।
विषण्णवदनां हि त्वां लक्षये भृशदुःखिताम् ॥ १७

मन्थरा तु वचः श्रुत्वा कैकेय्या मधुराक्षरम् ।
उवाच क्रोधसंयुक्ता वाक्यं वाक्यविशारदा ॥ १८

सा विषण्णतरा भूत्वा कुब्जा तस्या हितैषिणी ।
विषादयन्ती प्रोवाच भेदयन्ती च राघवम् ॥ १९

अक्षय्यं सुमहद्देवि प्रवृत्तं त्वद्विनाशनम् ।
रामं दशरथो राजा यौवराज्येऽभिषेक्ष्यति ॥ २०

साऽस्म्यगाधे भये मग्ना दुःखशोकसमन्विता ।
दह्यमानानलेनेव त्वद्धितार्थमिहागता ॥ २१

तव दुःखेन कैकेयि मम दुःखं महद्भवेत् ।
त्वद्वृद्धौ मम वृद्धिश्च भवेदेव न संशयः ॥ २२

नराधिपकुले जाता महिषी त्वं महीपतेः ।
उग्रत्वं राजधर्माणां कथं देवि न बुध्यसे ॥ २३

धर्मवादी शठो भर्ता श्लक्ष्णवादी च दारुणः ।
शुद्धभावे न जानीषे तेनैवमतिसन्धिता ॥ २४

उपस्थितः प्रयुञ्जानस्त्वयि सान्त्वमनर्थकम् ।
अर्थेनैवाद्य ते भर्ता कौसल्यां योजयिष्यति ॥ २५

अपवाह्य स दुष्टात्मा भरतं तव बन्धुषु ।
काल्ये स्थापयिता रामं राज्ये निहतकण्टके ॥ २६

शत्रुः पतिप्रवादेन मात्रेव हितकाम्यया ।
आशीविष इवाङ्केन बाले परिहृतस्त्वया ॥ २७

यथा हि कुर्यात्सर्पो वा शत्रुर्वा प्रत्युपेक्षितः ।
राज्ञा दशरथेनाद्य सपुत्रा त्वं तथा कृता ॥ २८

पापेनानृतसान्त्वेन बाले नित्यसुखोचिते ।
रामं स्थापयता राज्ये सानुबन्धा हता ह्यसि ॥ २९

सा प्राप्तकालं कैकेयी क्षिप्रं कुरु हितं तव ।
त्रायस्व पुत्रमात्मानं मां च विस्मयदर्शने ॥ ३०

मन्थराया वचः श्रुत्वा शयाना सा शुभानना ।
उत्तस्थौ हर्षसम्पूर्णा चन्द्रलेखेव शारदी ॥ ३१

अतीव सा तु संहृष्टा कैकेयी विस्मयान्विता ।
एकमाभरणं दत्वा कुब्जायै प्रमदोत्तमा ॥ ३२

कैकेयी मन्थरां दृष्ट्वा पुनरेवाब्रवीदिदम् ॥ ३३

इदं हि मन्थरे मह्यमाख्यासि परमं प्रियम् ।
एतन्मे प्रियमाख्याय्याः किं वा भूयः करोमि ते ॥ ३४

रामे वा भरते वाऽहं विशेषं नोपलक्षये ।
तस्मात्तुष्टाऽस्मि यद्राजा रामं राज्येऽभिषेक्ष्यति ॥ ३५

न मे परं किञ्चिदितस्त्वया पुनः
प्रियं प्रियार्हे सुवचं वचः परम् ।
तथा ह्यवोचस्त्वमतः प्रियोत्तरं
परं वरं ते प्रददामि तं वृणु ॥ ३६

इति सप्तमः सर्गः ॥

# अष्टमः सर्गः ॥

मन्थरा त्वभ्यसूयैनामुत्सृज्याभरणं च तत् ।
उवाचेदं ततो वाक्यं कोपदुःखसमन्विता ॥ १

हर्षं किमिदमस्थाने कृतवत्यसि बालिशे ।
शोकसागरमध्यस्थमात्मानं नावबुध्यसे ॥ २

मनसा प्रहसामि त्वां देवि दुःखार्दिता सती ।
यच्छोचितव्ये हृष्टाऽसि प्राप्येदं व्यसनं महत् ॥ ३

शोचामि दुर्मतित्वं ते का हि प्राज्ञा प्रहर्षयेत् ।
अरेः सपत्नीपुत्रस्य वृद्धिं मृत्योरिवागताम् ॥ ४

भरतादेव रामस्य राज्यसाधारणाद्भयम् ।
तद्विचिन्त्य विषण्णाऽस्मि भयं भीताद्धि जायते ॥ ५

लक्ष्मणो हि महेष्वासो रामं सर्वात्मना गतः ।
शत्रुघ्नश्चापि भरतं काकुत्स्थं लक्ष्मणो यथा ॥ ६

प्रत्यासन्नक्रमेणापि भरतस्यैव भामिनि ।
राज्यक्रमो विप्रकृष्टस्तयोस्तावत्कनीयसोः ॥ ७

विदुषः क्षत्रचारित्रे प्राज्ञस्य प्राप्तकारिणः ।
भयात्प्रवेपे रामस्य चिन्तयन्ती तवात्मजम् ॥ ८

सुभगा खलु कौसल्या यस्याः पुत्रोऽभिषेक्ष्यते ।
यौवराज्येन महता श्वः पुष्येण द्विजोत्तमैः ॥ ९

प्राप्तां सुमहतीं प्रीतिं प्रतीतां तां हतद्विषम् ।
उपस्थास्यसि कौसल्यां दासीवत्वं कृताञ्जलिः ॥ १०

एवं च त्वं सहास्माभिस्तस्याः प्रेष्या भविष्यसि ।
पुत्रश्च तव रामस्य प्रेष्यभावं गमिष्यति ॥ ११

हृष्टाः खलु भविष्यन्ति रामस्य परमाः स्त्रियः ।
अप्रहृष्टा भविष्यन्ति स्नुषास्ते भरतक्षये ॥ १२

तां दृष्ट्वा परमप्रीतां ब्रुवन्तीं मन्थरां ततः ।
रामस्यैव गुणान्देवी कैकेयी प्रशशंस ह ॥ १३

धर्मज्ञो गुरुभिर्दान्तः कृतज्ञः सत्यवाक् शुचिः ।
रामो राज्ञः सुतो ज्येष्ठो यौवराज्यमतोऽर्हति ॥ १४

भ्रातॄन् भृत्यांश्च दीर्घायुः पितृवत्पालयिष्यति ।
सन्तप्यसे कथं कुब्जे श्रुत्वा रामाभिषेचनम् ॥ १५

भरतश्चापि रामस्य ध्रुवं वर्षशतात्परम् ।
पितृपैतामहं राज्यमवाप्स्यति नरर्षभः ॥ १६

सा त्वमभ्युदये प्राप्ते वर्तमाने च मन्थरे ।
भविष्यति च कल्याणे किमर्थं परितप्यसे ॥ १७

यथा मे भरतो मान्यस्तथा भूयोऽपि राघवः ।
कौसल्यातोऽतिरिक्तं च सोऽनुशुश्रूषते हि माम् ॥ १८

राज्यं च यदि रामस्य भरतस्यापि तत्तथा ।
मन्यते हि यथाऽऽत्मानं तथा भ्रातृंश्च राघवः ॥ १९

कैकेयीवचनं श्रुत्वा मन्थरा भृशदुःखिता ।
दीर्घमुष्णं विनिश्वस्य कैकेयीमिदमब्रवीत् ॥ २०

अनर्थदर्शिनी मौर्ख्यादात्मानं नावबुध्यसे ।
शोकव्यसनविस्तीर्णे मज्जन्तं दुःखसागरे ॥ २१

भविता राघवो राजा राघवस्य च यः सुतः ।
राजवंशात्तु भरतः कैकेयी परिहास्यते ॥ २२

न हि राज्ञः सुताः सर्वे राज्ये तिष्ठन्ति भामिनि ।
स्थाप्यमानेषु सर्वेषु सुमहाननयो भवेत् ॥ २३

तस्माज्ज्येष्ठे हि कैकेयी राजतन्त्राणि पार्थिवाः ।
स्थापयन्त्यनवद्याङ्गी गुणवत्स्वितरेषु च ॥ २४

असावत्यन्तनिर्भग्नस्तव पुत्रो भविष्यति ।
अनाथवत्सुखेभ्यश्च राजवंशाच्च वत्सले ॥ २५

साऽहं त्वदर्थे सम्प्राप्ता त्वं तु मां नावबुध्यसे ।
सपत्नीवृद्धौ या मे त्वं प्रदेयं दातुमिच्छसि ॥ २६

ध्रुवं तु भरतं रामः प्राप्य राज्यमकण्टकम् ।
देशान्तरं नायित्वा लोकान्तरमथापि वा ॥ २७

बाल एव हि मातुल्यं भरतो नायितस्त्वया ।
सन्निकर्षाच्च सौहार्दं जायते स्थावरेष्वपि ॥ २८

भरतस्याप्यनुवशः शत्रुघ्नोऽपि समागतः ।
लक्ष्मणो हि यथा रामं तथाऽसौ भरतं गतः ॥ २९

श्रूयते हि द्रुमः कश्चित् छेत्तव्यो वनजीविभिः ।
सन्निकर्षादिषीकाभिर्मोचितः परमाद्भयात् ॥ ३०

गोप्ता हि रामं सौमित्रिर्लक्ष्मणं चापि राघवः ।
अश्विनोरिव सौभ्रात्रं तयोर्लोकेषु विश्रुतम् ॥ ३१

तस्मान्न लक्ष्मणे रामः पापं किञ्चित्करिष्यति ।
रामस्तु भरते पापं कुर्यादेव न संशयः ॥ ३२

तस्माद्राजगृहादेव वनं गच्छतु ते सुतः ।
एतद्धि रोचते मह्यं भृशं चापि हितं तव ॥ ३३

एवं ते ज्ञातिपक्षस्य श्रेयश्चैव भविष्यति ।
यदि चेद्भरतो धर्मात् पित्र्यं राज्यमवाप्स्यति ॥ ३४

स ते सुखोचितो बालो रामस्य सहजो रिपुः ।
समृद्धार्थस्य नष्टार्थो जीविष्यति कथं वशे ॥ ३५

अभिद्रुतमिवारण्ये सिंहेन गजयूथपम् ।
प्रच्छाद्यमानं रामेण भरतं त्रातुमर्हसि ॥ ३६

दर्पान्निराकृता पूर्वं त्वया सौभाग्यवत्तया ।
राममाता सपत्नी ते कथं वैरं न धारयेत् ॥ ३७

यदा हि रामः पृथिवीमवाप्स्यति
प्रभूतरत्नाकरशैलपत्तनाम् ।
तदा गमिष्यस्यशुभं पराभवं
सहैव दीना भरतेन भामिनि ॥ ३८

यदा हि रामः पृथिवीमवाप्स्यति
ध्रुवं प्रनष्टो भरतो भविष्यति ।
अतो हि सञ्चिन्तय राज्यमात्मजे
परस्य चैवाद्य विवासकारणम् ॥ ३९

इति अष्टमः सर्गः ॥

## नवमः सर्गः ॥

एवमुक्ता तु कैकेयी क्रोधेन ज्वलितानना ।
दीर्घमुष्णं च निश्वस्य मन्थरामिदमब्रवीत् ॥ १

अद्य राममितः क्षिप्रं वनं प्रस्थापयाम्यहम् ।
यौवराज्येन भरतं क्षिप्रमेवाभिषेचये ॥ २

इदं त्विदानीं सम्पश्य केनोपायेन मन्थरे ।
भरतः प्राप्नुयाद्राज्यं न तु रामः कथञ्चन ॥ ३

एवमुक्ता तया देव्या मन्थरा पापदर्शिनी ।
रामार्थमुपहिंसन्ती कैकेयीमिदमब्रवीत् ॥ ४

हन्तेदानीं प्रवक्ष्यामि कैकेयि श्रूयतां च मे ।
यथा ते भरतो राज्यं पुत्रः प्राप्स्यति केवलम् ॥ ५

किं न स्मरसि कैकेयि स्मरन्ती वा निगूहसे ।
यदुच्यमानमात्मार्थं मत्तस्त्वं श्रोतुमिच्छसि ॥ ६

मयोच्यमानं यदि ते श्रोतुं छन्दो विलासिनि ।
श्रूयतामभिधास्यामि श्रुत्वा चापि विमृश्यताम् ॥ ७

श्रुत्वेदं वचनं तस्या मन्थरायास्तु कैकयी ।
किञ्चिदुत्थाय शयनात् स्वास्तीर्णादिदमब्रवीत् ॥ ८

कथय त्वं ममोपायं केनोपायेन मन्थरे ।
भरतः प्राप्नुयाद्राज्यं न तु रामः कथञ्चन ॥ ९

एवमुक्ता तु कैकेय्या मन्थरा पापदर्शिनी ।
रामार्थमुपहिंसन्ती कुब्जा वचनमब्रवीत् ॥ १०

तव दैवासुरे युद्धे सह राजर्षिभिः पतिः ।
अगच्छत्त्वामुपादाय देवराजस्य साह्यकृत् ॥ ११

दिशमास्थाय कैकेयि दक्षिणां दण्डकान्प्रति ।
वैजयन्तमिति ख्यातं पुरं यत्र तिमिध्वजः ॥ १२

स शम्बर इति ख्यातः शतमायो महासुरः ।
ददौ शक्रस्य संग्रामं देवसङ्घैरनिर्जितः ॥ १३

तस्मिन्महति संग्रामे पुरुषान्क्षतविक्षतान् ।
रात्रौ प्रसुप्तान् घ्नन्ति स्म तरसाऽऽपास्य राक्षसाः ॥ १४

तत्राकरोन्महद्युद्धं राजा दशरथस्तदा ।
असुरैश्च महाबाहुः शस्त्रैश्च शकलीकृतः ॥ १५

अपवाह्य त्वया देवि संग्रामान्नष्टचेतनः ।
तत्रापि विक्षतः शस्त्रैः पतिस्ते रक्षितस्त्वया ॥ १६

तुष्टेन तेन दत्तौ ते द्वौ वरौ शुभदर्शने ॥ १७

स त्वयोक्तः पतिर्देवि यदेच्छेयं तदा वरौ ।
गृह्णीयामिति तत्तेन तथेत्युक्तं महात्मना ॥ १८

अनभिज्ञा ह्यहं देवि त्वयैव कथिता पुरा ।
कथैषा तव तु स्नेहान्मनसा धार्यते मया ॥ १९

रामाभिषेकसम्भारान् निगृह्य विनिवर्तय ।
तौ वरौ याच भर्तारं भरतस्याभिषेचनम् ।
प्रव्राजनं च रामस्य त्वं वर्षाणि चतुर्दश ॥ २०

चतुर्दश हि वर्षाणि रामे प्रव्राजिते वनम् ।
प्रजाभावगतस्नेहः स्थिरः पुत्रो भविष्यति ॥ २१

क्रोधागारं प्रविश्याद्य क्रुद्धेवाश्वपतेः सुते ।
शेष्वानन्तर्हितायां त्वं भूमौ मलिनवासिनी ॥ २२

मा स्मैनं प्रत्युदीक्षेथा मा चैनमभिभाषथाः ।
रुदन्ती चापि तं दृष्ट्वा जगत्यां शोकलालसा ॥ २३

दयिता त्वं सदा भर्तुरत्र मे नास्ति संशयः ।
त्वत्कृते स महाराजो विशेदपि हुताशनम् ॥ २४

न त्वां क्रोधयितुं शक्तो न क्रुद्धां प्रत्युदीक्षितुम् ।
तव प्रियार्थं राजा हि प्राणानपि परित्यजेत् ॥ २५

न ह्यतिक्रमितुं शक्तस्तव वाक्यं महीपतिः ।
मन्दस्वभावे बुध्यस्व सौभाग्यबलमात्मनः ॥ २६

मणिमुक्तासुवर्णानि रत्नानि विविधानि च ।
दद्याद्दशरथो राजा मा स्म तेषु मनः कृथाः ॥ २७

यौ तौ देवासुरे युद्धे वरौ दशरथोऽददात् ।
तौ स्मारय महाभागे सोऽर्थो मा त्वामतिक्रमेत् ॥ २८

यदा तु ते वरं दद्यात् स्वयमुत्थाप्य राघवः ।
व्यवस्थाप्य महाराजं त्वमिमं वृणुया वरम् ॥ २९

रामं प्रव्राजयारण्ये नव वर्षाणि पञ्च च ।
भरतः क्रियतां राजा पृथिव्यां पार्थिवर्षभः ॥ ३०

चतुर्दश हि वर्षाणि रामे प्रव्राजिते वनम् ।
रूढश्च कृतमूलश्च शेषं स्थास्यति ते सुतः ॥ ३१

रामप्रव्राजनं चैव देवि याचस्व तं वरम् ।
एवं सेत्स्यन्ति पुत्रस्य सर्वार्थास्तव भामिनि ॥ ३२

एवं प्रव्राजितश्चैव रामोऽरामो भविष्यति ।
भरतश्च हतामित्रस्तव राजा भविष्यति ॥ ३३

येन कालेन रामश्च वनात्प्रत्यागमिष्यति ।
तेन कालेन पुत्रस्ते कृतमूलो भविष्यति ।
संगृहीतमनुष्यश्च सुहृद्भिः सार्द्धमात्मवान् ॥ ३४

प्राप्तकालं तु ते मन्ये राजानं वीतसाध्वसा ।
रामाभिषेकसङ्कल्पान् निगृह्य विनिवर्तय ॥ ३५

अनर्थमर्थरूपेण ग्राहिता सा ततस्तया ।
हृष्टा प्रतीता कैकेयी मन्थरामिदमब्रवीत् ॥ ३६

सा हि वाक्येन कुब्जायाः किशोरीवोत्पथं गता ।
कैकेयी विस्मयं प्राप्ता परं परमदर्शना ॥ ३७

कुब्जे त्वां नाभिजानामि श्रेष्ठां श्रेष्ठाभिधायिनीम् ।
पृथिव्यामसि कुब्जानामुत्तमा बुद्धिनिश्चये ॥ ३८

त्वमेव तु ममार्थेषु नित्ययुक्ता हितैषिणी ।
नाहं समवबुध्येयं कुब्जे राज्ञश्चिकीर्षितम् ॥ ३९

सन्ति दुःसंस्थिताः कुब्जा वक्राः परमदारुणाः ।
त्वं पद्ममिव वातेन सन्नता प्रियदर्शना ॥ ४०

उरस्तेऽभिनिविष्टं वै यावत्स्कन्धं समुन्नतम् ।
अधस्ताच्चोदरं शातं सुनाभमिव लज्जितम् ॥ ४१

परिपूर्णं च जघनं सुपीनौ च पयोधरौ ।
विमलेन्दुसमं वक्त्रमहो राजसि मन्थरे ॥ ४२

जघनं तव निर्घुष्टं रशनादामशोभितम् ।
जङ्घे भृशमुपन्यस्ते पादौ चाप्यायतावुभौ ॥ ४३

त्वमायताभ्यां सक्थिभ्यां मन्थरे क्षौमवासिनी ।
अग्रतो मम गच्छन्ती राजहंसीव राजसे ॥ ४४

आसन् याश्शम्बरे मायाः सहस्रमसुराधिपे ।
सर्वास्त्वयि निविष्टास्ता भूयश्चान्याः सहस्रशः ॥ ४५

तत्रेदं स्थगु यद्दीर्घं रथघोणमिवायतम् ।
मतयः क्षत्रविद्याश्च मायाश्चात्र वसन्ति ते ॥ ४६

अत्र ते प्रतिमोक्ष्यामि मालां कुब्जे हिरण्मयीम् ।
अभिषिक्ते च भरते राघवे च वनं गते ॥ ४७

जात्येन च सुवर्णेन सुनिष्टप्तेन मन्थरे ।
लब्धार्था च प्रतीता च लेपयिष्यामि ते स्थगु ॥ ४८

मुखे च तिलकं चित्रं जातरूपमयं शुभम् ।
कारयिष्यामि ते कुब्जे शुभान्याभरणानि च ॥ ४९

परिधाय शुभे वस्त्रे देवतेव चरिष्यसि ॥ ५०

चन्द्रमाह्वयमानेन मुखेनाप्रतिमानना ।
गमिष्यसि गतिं मुख्यां गर्हयन्ती द्विषज्जनम् ॥ ५१

तवापि कुब्जाः कुब्जायाः सर्वाभरणभूषिताः ।
पादौ परिचरिष्यन्ति यथैव त्वं सदा मम ॥ ५२

इति प्रशस्यमाना सा कैकेयीमिदमब्रवीत् ।
शयानां शयने शुभ्रे वेद्यामग्निशिखामिव ॥ ५३

गतोदके सेतुबन्धो न कल्याणि विधीयते ।
उत्तिष्ठ कुरु कल्याणं राजानमनुदर्शय ॥ ५४

तथा प्रोत्साहिता देवी गत्वा मन्थरया सह ।
क्रोधागारं विशालाक्षी सौभाग्यमदगर्विता ॥ ५५

अनेकशतसाहस्रं मुक्ताहारं वराङ्गना ।
अवमुच्य महार्हाणि शुभान्याभरणानि च ॥ ५६

ततो हेमोपमा तत्र कुब्जावाक्यवशं गता ।
संविश्य भूमौ कैकेयी मन्थरामिदमब्रवीत् ॥ ५७

इह वा मां मृतां कुब्जे नृपायावेदयिष्यसि ।
वनं वा राघवे प्राप्ते भरतः प्राप्स्यति क्षितिम् ॥ ५८

न सुवर्णेन मे ह्यर्थो न रत्नैर्न च भोजनैः ।
एष मे जीवितस्यान्तो रामो यद्यभिषिच्यते ॥ ५९

अथो पुनस्तां महिषीं महीक्षितो
वचोभिरत्यर्थमहापराक्रमैः ।
उवाच कुब्जा भरतस्य मातरं
हितं वचो राममुपेत्य चाहितम् ॥ ६०

प्रपत्स्यते राज्यमिदं हि राघवो
यदि ध्रुवं त्वं ससुता च तप्स्यसे ।

अतो हि कल्याणि यतस्व तत्तथा
यथा सुतस्ते भरतोऽभिषेक्ष्यते ॥ ६१

तथातिविद्धा महिषी तु कुब्जया
समाहता वागिषुभिर्मुहुर्मुहुः ।
निधाय हस्तौ हृदयेऽतिविस्मिता
शशंस कुब्जां कुपितां पुनः पुनः ॥ ६२

यमस्य वा मां विषयं गतामितो
निशाम्य कुब्जे प्रतिवेदयिष्यसि ।
वनं गते वा सुचिराय राघवे
समृद्धकामो भरतो भविष्यति ॥ ६३

अहं हि नैवास्तरणानि न स्रजः
न चन्दनं नाञ्जनपानभोजनम् ।
न किञ्चिदिच्छामि न चेह जीवितं
न चेदितो गच्छति राघवो वनम् ॥ ६४

अथैतदुक्त्वा वचनं सुदारुणं
निधाय सर्वाभरणानि भामिनी ।
असंवृतामास्तरणेन मेदिनीं
तदाऽधिशिश्ये पतितेव किन्नरी ॥ ६५

उदीर्णसंरम्भतमोवृतानना
तथाऽवमुक्तोत्तममाल्यभूषणा ।
नरेन्द्रपत्नी विमना बभूव सा
तमोवृता द्यौरिव मग्नतारका ॥ ६६

इति नवमः सर्गः ॥

## दशमः सर्गः ॥

विदर्शिता यदा देवी कुब्जया पापया भृशम् ।
तदा शेते स्म सा भूमौ दिग्धविद्धेव किन्नरी ॥ १

निश्चित्य मनसा कृत्यं सा सम्यगिति भामिनी ।
मन्थरायै शनैः सर्वमाचचक्षे विचक्षणा ॥ २

सा दीना निश्चयं कृत्वा मन्थरावाक्यमोहिता ।
नागकन्येव निश्वस्य दीर्घमुष्णं च भामिनी ।
मुहूर्तं चिन्तयामास मार्गमात्मसुखावहम् ॥ ३

सा सुहृच्चार्थकामा च तं निशम्य सुनिश्चयम् ।
बभूव परमप्रीता सिद्धिं प्राप्येव मन्थरा ॥ ४

अथ सा रुषिता देवी सम्यक् कृत्वा सुनिश्चयम् ।
संविवेशाबला भूमौ निवेश्य भ्रुकुटीं मुखे ॥ ५

ततश्चित्राणि माल्यानि दिव्यान्याभरणानि च ।
अपविद्धानि कैकेय्या तानि भूमिं प्रपेदिरे ॥ ६

तया तान्यपविद्धानि माल्यान्याभरणानि च ।
अशोभयन्त वसुधां नक्षत्राणि यथा नभः ॥ ७

क्रोधागारे निपतिता सा बभौ मलिनाम्बरा ।
एकवेणिं दृढं बद्ध्वा गतसत्वेव किन्नरी ॥ ८

आज्ञाप्य तु महाराजः राघवस्याभिषेचनम् ।
उपस्थानमनुज्ञाप्य प्रविवेश निवेशनम् ॥ ९

अद्य रामाभिषेको वै प्रसिद्ध इति जज्ञिवान् ।
प्रियार्हां प्रियमाख्यातुं विवेशान्तःपुरं वशी ॥ १०

स कैकेय्या गृहं श्रेष्ठं प्रविवेश महायशाः ।
पाण्डुराभ्रमिवाकाशं राहुयुक्तं निशाकरः ॥ ११

शुकबर्हिणसंयुक्तं क्रौञ्चहंसरुतायुतम् ।
वादित्ररवसङ्घुष्टं कुब्जावामनिकायुतम् ॥ १२

लतागृहैश्चित्रगृहैश्चम्पकाशोकशोभितैः ।
दान्तराजतसौवर्णवेदिकाभिः समायुतम् ॥ १३

नित्यपुष्पफलैर्वृक्षैः वापीभिश्चोपशोभितम् ।
दान्तराजतसौवर्णैः संवृतं परमासनैः ॥ १४

विविधैरन्नपानैश्च भक्ष्यैश्च विविधैरपि ।
उपपन्नं महार्हैश्च भूषणैस्त्रिदिवोपमम् ॥ १५

तत्प्रविश्य महाराजः स्वमन्तःपुरमृद्धिमत् ।
न ददर्श प्रियां भार्यां कैकेयीं शयनोत्तमे ॥ १६

स कामबलसंयुक्तो रत्यर्थी मनुजाधिपः ।
अपश्यन्दयितां भार्यां पप्रच्छ विषसाद च ॥ १७

न हि तस्य पुरा देवी तां वेलामत्यवर्तत ।
न च राजा गृहं शून्यं प्रविवेश कदाचन ॥ १८

ततो गृहगतो राजा कैकेयीं पर्यपृच्छत ।
यथापुरमविज्ञाय स्वार्थलिप्सुमपण्डिताम् ॥ १९

प्रतिहारी त्वथोवाच सन्त्रस्ता सकृताञ्जलिः ।
देव देवी भृशं क्रुद्धा क्रोधागारमभिद्रुता ॥ २०

प्रतिहार्या वचः श्रुत्वा राजा परमदुर्मनाः ।
विषसाद पुनर्भूयो लुलितव्याकुलेन्द्रियः ॥ २१

तत्र तां पतितां भूमौ शयानामतथोचिताम् ।
प्रतप्त इव दुःखेन सोऽपश्यज्जगतीपतिः ॥ २२

स वृद्धस्तरुणीं भार्यां प्राणेभ्योऽपि गरीयसीम् ।
अपापः पापसङ्कल्पां ददर्श धरणीतले ॥ २३

लतामिव विनिष्कृत्तां पतितां देवतामिव ।
किन्नरीमिव निर्धूतां च्युतामप्सरसं यथा ॥ २४

वामामिव परिभ्रष्टां हरिणीमिव संयताम् ।
करेणुमिव दिग्धेन विद्धां मृगयुना वने ।
महागज इवारण्ये स्नेहात्परिममर्श ताम् ॥ २५

परिमृज्य च पाणिभ्यामभिसन्त्रस्तचेतनः ।
कामी कमलपत्राक्षीमुवाच वनितामिदम् ॥ २६

न तेऽहमभिजानामि क्रोधमात्मनि संश्रितम् ।
देवि केनाभिशप्ताऽसि केन वा त्वं विमानिता ॥ २७

यदर्थं मम दुःखाय शेषे कल्याणि पांसुषु ॥ २८

